# वेदान्तपररामायणं

दशेन्द्रियरथो देही राजा दशरथः स्मृतः ।
कौसल्या तत्प्रिया बुद्धी रामस्तत्रोद्गतः परः ॥ १॥

वृत्वा सीतां स्वानुभूतिं सुखमास्तेऽथ दैवतः ।
संसारविपिनं प्रापाहङ्कारो रावणाभिधः ॥ २॥

राजसः स्वानुभूतिं तां सीतां यत्नाज्जहार ह ।
रामः परात्मापि ततः स्वानुभूतिवियोगतः ॥ ३॥

प्राप्तो दीनदशां दुःखी शुशोच विरहातुरः ।
परिभ्रमन्हनुमता विवेकेन च सङ्गतः ॥ ४॥

तेन सीतास्वानुभूतिस्थितिवार्ता प्रदर्शिता ।
ततो वानरसद्वृत्तिसैन्येन च हनूमता ॥ ५॥

सेतुं बध्वा स जलधौ साधनाश्मभिरुत्कटैः ।
ततो भवाब्धिमुल्लङ्घ्य दीप्तज्ञानाग्निना भृशम् ॥ ६॥

सूक्ष्मदेहाख्यलङ्कां च दग्ध्वौपनिषदस्त्रतः ।
कामक्रोधादि रक्षांसि हत्वा युद्धे सहस्रशः ॥ ७॥

सात्त्विकाहङ्कारबिभीषणसाहाय्यतस्ततः ।
कुम्भकर्णं तामसाहङ्कारं राजसमप्यथ ॥ ८॥

निहत्य रावणं स्वानुभूतिं सीतां प्रगृह्य च ।
रामः स्वरूपसाम्राज्येऽभिषिक्तोऽरीरमत्तया ॥ ९॥

इति श्री परमपूजनीय श्रीवासुदेवानन्दसरस्वतीविरचितं
वेदान्तपररामायणं सम्पूर्णम् ॥